श्रीः।

श्रीभगवद्रामानन्दाचार्य्यप्रणीतम्
शारीरकमीमांसाथाः

# आनन्दभाष्यम्

तच्च

श्रीमद्वेदमार्गप्रतिष्ठापनाचार्य्यजगद्गुरुश्रीरामानन्द-मुनीन्द्रान्वयप्रतिष्ठितसप्तत्रिंशद्द्वारपीठपरिगणितप्रधानपीठपतिश्रीमदनुभवानन्द स्वामिवंशाम्बुधिपूर्णचन्द्रेण श्रीबालाजीस्थानाभिजनेन—न्यायोपाध्याय—मीमांसोपाध्याय--तर्कतीर्थ--वेदान्ततीर्थादिगवर्नमेन्टविश्वविद्यालयीयविविधोपाधिविभूषितेन समुत्तीर्णकाशिकराजकीयविश्वविद्यालयव्याकरणाचार्यखण्डचतुष्टयपरीक्षेण-बडोदाराजकीयपरीक्षान्यायवेदान्तपरीक्षकेण 'वेदान्तशिरोमणिः' 'दर्शननिधिः' इत्यादिपदवीसमलंकृतेन च

स्वामिश्रीरघुवरदासवेदान्तिना
परिशोधितम्।



तेनैव च
मनोज्ञया 'तत्त्वप्रकाशिकया' भूमिकया समलंकृतम्

श्रीरामानन्दीयवैष्णवमहामण्डलेन च
मुद्रापयित्वा प्रकाशितम्।

प्रथम संस्करणम्

पुस्तकसंख्या १००० | अस्य सर्वोप्यधिकारः परिशोधकेन स्वायत्तीकृतः। | श्रीरामानन्दाब्दः ६३० विक्रमाब्दः १९८६

ख्रिष्टाब्दः १९२९

# उपकृतिस्मृतिः ।

अस्य श्रीमदानन्दभाष्यस्य संशोधनमुद्रापणादिकार्येषु प्रवृत्तानामस्माकं पञ्चवर्षाणि व्यत्ययुः। एतावांश्च सर्वोऽपि समयोऽस्माभिःसौराष्ट्र (काठियावाड) जनपदावयवलिम्बडीपत्तने दिगन्तविश्रान्तकीर्तिकलापानां नरपतिकुलकैरवकलाकराणां भक्तिज्ञानवराग्यप्रवर्धकसच्छास्त्राभ्यासजनितसाम्यविजितमोहादिषड्रिपूणां द्विजोचिताचारचरणपरमपुरुषार्थलिप्सूनां विद्याचिकित्सापुस्तकाद्यालयानामुद्घाटनेन विद्युद्दीपादिपरिदीपितराजमार्गनिर्माणेन सदसद्विवेकिप्राड्विपाकविलसितन्यायालयादिसंस्थापनेन च शश्वदीतिभीतिरहितप्रजाजनानुरागमान्यानां गोद्विजानाथाद्याश्रितजननिकायकामतरूणां विविधद्रविणार्पणसन्तोषितसूरिसमहस्तूयमानावदातकीर्तिधवलितदिङ्मण्डलानांविरक्ताश्रमिणां सेवया साक्षात्कृततत्त्वग्रामाणां धैर्यगाम्भीर्यौदार्यशौर्यैश्वर्यदयादानदाक्षिण्यादिलोकोत्तरगुणनिधीनां यशोधनानां श्रीमतां श्रीदौलतसिंहजी (के सी.आइ इ) महोदयानां लिम्बडीधराधीश्वराणांपरमप्रेम्णा लिम्बडीत्याख्यायां तदीयराजधान्यामेव सुसुखं व्ययितः। नीतश्चैतावतानेहसारब्धमिदं कार्यं निष्प्रत्यूहं पूर्णताम् अतश्चैषां धर्मधुरीणानां महाराजानामुपकारस्मृतिपूर्वकं चिरं कृतज्ञतामाविष्कुर्मः समाशास्महे चेमेभूपालशिरोमणयः पुत्रपौत्रादिसमन्विताः निरतिशयसुखमनुभवन्तश्चिरञ्जीयासुः। विदधतुचाहर्दिवं स्वकीयवैभवेन धार्मिकनैतिकबलाभ्याञ्च सततमैहिकामुष्मिकसुखदं लोककल्याणमिति ।

न विस्मरामश्चैवं निसर्गकरुणापूर्णहृदयाया लिम्बडीराजमातुः 'श्री ६ बाईराजबा' (साहब) देव्याः सन्ततमनन्तोपकारपरम्परामिति ।

१९८६ विक्रमाब्दस्य<br>विजयदशम्याम्<br>लिम्बडी नगरे.

समीहन्ते<br>तदीयानन्यसौहार्दगृहीतहृदयाः<br>श्री रघुवरदास वेदान्तिनः

श्रीमते रामानन्दाय नमः ॥

अथारभ्यते तत्त्वप्रकाशिकाख्या-

# भूमिका

जगल्लीलाबीजं निरवधिककल्याणगुणकं-
महेशाद्यैर्वन्द्यं कलुषितगुणास्पृष्टवपुषम् ।
शरण्यं लोकानां श्रुतिनुतपदं भक्तसुखदम्-
श्रयेऽहं श्रीरामं द्विभुजकमनीयं प्रतिदिनम् ॥ १ ॥

*　　*　　*

तं नौमि परमाचार्यं रामानन्दं जगद्गुरुम् ।
यद्वचः स्मरतां नित्यं जगत्त्रासनिरासकृत् ॥ २ ॥

*　　*　　*

सीतानाथसमारम्भां रामानन्दार्यमध्यमाम् ।
अस्मदाचार्यपर्य्यन्तां वन्दे गुरुपरम्पराम् ॥ ३ ॥

*　　*　　*

यस्य प्रतापतपनेन च मद्धृदिस्थं-
दुर्बुद्धताजनकसंतमसं न्यषेधि ।
शास्त्रेषु चाप्रतिमधीस्समकारि तं वै-
वन्दे स्वदेशिकवराङ्घ्रिसरोजरेणुम् ॥ ४ ॥

उपक्रमः अथाखिलहेयप्रत्यनीकानन्तकल्याणगुणगणार्णवस्य जगदुदयविभवलय-लीलारसिकस्य परमपुरुषस्य भगवतः श्रीजानकीजानेश्चरण-नलिनाकम्पानुकम्पयैव परमपुरुषावातिलक्षणस्य मोक्षस्य सिद्धि-रित्यखिलाम्नायविदां समयः ।

तदेतदतिमतिविषयीकृताम्नायान्तसत्सिद्धान्त आध्यात्मिकादिवृजिनार्णव-निमग्नाखिलजनोद्धरणदयोदन्वान् भगवद्वासुदेवापरावतार श्रीकृष्णद्वैपायनाचार्यः परमदुर्गममाम्नायान्तस्तलसमापन्नं सकललोककल्याणैकप्रयोजनमनल्पफलक-मप्यल्पीयसा श्रमेण साध्यं स्वमनीषोपकल्पितवैतण्डिकपथमाश्रयद्भिर्दुराराध्य-मपि साम्प्रदायिकाचारविचारप्रवणीकृतान्तः करणैः समाराध्यं वेदान्तरहस्यं प्रतिष्ठापयामास कर्मस्वरूपावगमपरेणापश्चिममीमांसाशास्त्रेणैकशास्त्रत्वमापन्ने* ष्वुत्तरमीमांसापरनामधेयेषु ब्रह्मसूत्रेषु । यस्य सिद्धान्तसौरभं समाघ्राय

* अत्रैकशास्त्र्यञ्चैकवाक्यत्वरूपम् । तत्र वर्णसमुदायात्मनः शास्त्रस्य स्वरूपेणैक्यं न सम्भवतीत्यतः साक्षात्परम्परया वा समानचरमप्रयोजनोद्देश्यकप्रवृत्तिजनकत्वेनैकव्याख्येय-व्याख्यानरूपत्वेन वैकशास्त्रत्वमवगन्तव्यम् । अस्ति चैवं पूर्वमीमांसावगतस्वरूपाणां कर्मणां फलाभिसन्धिवर्जनपुरस्सरमनुष्ठितानां ज्ञानजनकत्वम् ।

ज्ञानस्य च मोक्षजनकत्वमित्युत्तरमीमांसावसेयम् । तथा कर्मोपासनयोः पूर्वोत्तरमीमांसा-प्रतिपाद्ययोः साक्षात्परम्परया वा निश्रेयसरूपैककार्यार्जकत्वात्तत्प्रतिपादकशास्त्रयोरप्येकफलो-द्देश्यकप्रवृत्त्युत्पादकत्वेनैकशास्त्र्यम । एवमाम्नायरूपैकग्रन्थव्याख्यानत्वस्याप्युभयत्र तुल्यत्वादैकशास्त्र्यमुपपन्नमेव । तदुक्तं "एकव्याख्येयव्याख्यानात्मना विंशतिलक्षणमेकं शास्त्रमि"ति । इत्थमेव च "अल्प श्रुतेरितिचेत्तदुक्तम्" (ब्र० सू० ) "हानौ तूपायन-शब्दशेषत्वात्कुशाच्छन्दस्तुत्युपगानवत्तदुक्तम्" (ब्र.सू० ३।३।२६) इत्याद्युत्तरमीमांसासूत्रघटकी-भूततदुक्तमित्यादितात्पर्यविषयीभूतार्थप्रतिपादकत्वेनापि पूर्वमीमांसायास्तन्निरूपितैकग्रन्थ-तावत्त्वमक्षुण्णम् । न च भिन्नकर्तृकत्वेन नैकग्रन्थत्वमिति वाच्यम्, कादम्बर्यादौ तथा दर्शनात् ।

एवञ्च "अर्थैकत्वादेकं वाक्यं साकाङ्क्षञ्चेदविभागे स्यात्" (जै. सू० २। १। ४६) इति सूत्रसिद्धं साकाङ्क्षत्वे सत्येकार्थप्रतिपत्तिपरत्वमेवात्र तत्वमिति दिक् । एवमनेकसमाधानानां जागरूकत्वान्निर्णयसागरीयशास्त्रादीपिकाभूमिकाकारैर्भिन्नत्वसाधने केवलं श्रम एवाङ्गी-कृत इति निश्चिनुमः ।

भूमिकाकृतः

जननिकायः स्वोपार्जिताखिलकर्मफलमध्यवनितलमुपभुज्यान्तरेण श्रममनुभवति सुखैकसरणिं मोक्षधरणिम् ।

तत्प्रमाणकमेतन्निखिलविशिष्टाद्वैताचार्यसर्वस्वभूतं भगवद्वैपायनमुनिना प्रवर्तितं श्रीशुकपुरुषोत्तमगङ्गाधररामेश्वरराघवानन्दयतिभिरुपकृतं परमाचार्यजगद्गुरुश्रीरामानन्दमुनीन्द्रैरुपबर्धितं श्रुतिशिरस्समुद्दीपितं मिथ्यावादिकर्कशतर्करचनाचयानवगतमनवच्छिन्नानादिश्रीसम्प्रदायजुष्टं विशिष्टाद्वैतमतमिदानीन्तने नूतनेऽप्यनेहसि भृशमभ्युज्जृम्भतेऽवनिमण्डले ।

**श्रीमद्रामानन्दस्वामिजन्मकारणम्**

कदाचिदासीदिदमेकतोऽवनिमण्डलं मण्डलानुविधायिनां परमवैदिकसन्मतद्वेषदूषितान्तःकरणानां दुरुद्धरदुर्मदविरोधानुबन्धिदुर्गन्धगन्धिताशापटलानां परस्परामर्शसंघर्षघर्षिताघविलसितमानसानां अहमहमिकयैकयाहिताखर्वगर्वाणां चार्वाकशाक्यजिननिचयचर्चिताध्वबन्धुराध्वनीनानां क्रीडास्थलं सकलम् ।

अपरतोऽखिलखलाखण्डलमण्डलीध्वस्तसमस्तवैष्णवाचारविहारप्राङ्गणं दुर्नयप्राज्यसाम्राज्यम् । तदनेहसि रहसि कथञ्चिदनुष्ठीयमानस्वाम्नायक्रियाकलापमपिपापमित्युद्घोषयन्तोऽनन्तसामन्तश्रीमन्तो यवनदुर्नयपक्षदक्षाः पर्यटन्त आसन् । धर्मशासकेषु केचिच्छौद्धोदन्यधिगताध्वान्धतमसाच्छन्नविचारचक्षुषः शून्यमेवेदमित्युदाजह्रुः । अपरे चार्हदनर्हसमयसमीरसमीरितदुराग्रहरेणुराजितलोचना नास्तीश्वरो विश्वविलासहेतुरित्येव प्रथयाञ्चक्रुः । अन्ये त्वनल्पकल्पनाकल्पितः शुक्तिशकलकलधौतमिवेवायं चिदचिद्विभागो न पारमार्थिक इत्यभिदधुः । किं बहुना नास्ति पारलौकिकफलं किमपि यागदानादिलक्षणं कर्म न पाषाणप्रचुररचितकलेवरा मन्दिरैकदेशशिल्पिनिवहनिहिता काचिदमरविशेषमूर्तिरप्याम्नायसम्मता न वास्थिनिकरनिक्षेपफलानि प्रेतप्रेप्सितपिण्डप्रक्षेपेण किल पङ्किलानि सरित्प्रस्रवणसरोजलमयानि तीर्थानीशतेतमामघौघप्रमार्जनं कर्तुमित्यसकृदकार्षुरिमं कालुष्योपचितकलेवरं हालाहलविषविषमकोलाहलं विवादवद्धादरा दुर्वावदूकाः ।

इतीमामेव भगवज्जनहृदयाहितव्यथां दुरवस्थामुत्थापयितुं संस्थापयितुञ्च निरस्तसमस्तदोषाशङ्ककलङ्कपङ्कापौरुषेयाम्नायान्तसमधिगतानाद्यनन्तं विशिष्टाद्वैतराद्धान्तम् । अखिलयोगिजनजेगीयमानयशोनिकरकरुणाकमनीयकान्तिकलितकलेवरप्रतिवादिमत्तमातङ्गघटाविघटनकेसरिणः श्रीमज्जानकीजानिप्रसादसमुल्लासितश्रीराममन्त्रादिरहस्यत्रयप्रवर्तकाचार्यश्रुतिशिरः समुद्भासितविशिष्टाद्वैतमतप्रतिपन्थिपयोधरोत्सारणप्रबलप्रभञ्जनाः सुरमुनिमनुजमनोमोदमादधानाः सकलसंयमिहृदयमानसविकसितारविन्दवृन्दारकवृन्दवन्दनीयपादारविन्दश्रीमद्रामानन्दमुनीन्द्रा भारतीयावनितलमलञ्चक्रुः ।

अत्रेदमवधेयं—लोकानां हितकाम्यया पूर्वं साकेतलोक एव प्रहितं निरतिशयप्रियं श्रीराममहामनुं कलावपि सर्वेषु लोकेषु विशेषेण प्रवर्तयिष्यन् साकेतपतिर्भगवान् श्रीरामचन्द्रः—

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥ गी० ४।

इति स्वकीयोक्तिं चरितार्थयन् स्वयमेव भगवद्रामानन्दाचार्यस्वरूपेणावततार ।

तदुक्तं वैश्वानरागस्त्यसंहितादिषु । तथाहि—

सोऽवातरज्जगन्मध्ये जन्तूनांभव-सङ्कटात् ।
पारं कर्तुं हि धर्मात्मा रामानन्दःस्वयं स्वभूः ॥
माघेतुकृष्णसप्तम्यां चित्रानक्षत्रसंयुते ।
कुम्भलग्ने सिद्धयोगे सप्तदण्डगते रवौ ॥
रामानन्दः स्वयंरामः प्रादुर्भूतो महीतले । वै० न० सं०
मुने सभगवानित्थं सुतीक्ष्ण जगदीश्वरः ।
सत्य संधो हरिर्जातो विधास्यति शुभं नृणाम् ॥
श्री सम्प्रदायश्रेष्ठश्च जनोद्धारपरं सदा ।
विज्ञाय राघवानन्दं लब्ध्वातस्मात् षडक्षरम्॥ अ.सं० १ ३ ३ अ०

इति

इमे च लोकोत्तरप्रकर्षशालिनश्च्यन्तारविन्दमरीचिमालिनः श्रीसम्प्रदायाचार्यवर्यसार्वभौमाः स्वावतारवैभवेन कदा कं जनपदं वंशञ्चावतंसयामासुरित्येतदुच्यते ।

**श्रीभगवत्पादानां प्रादुर्भावे देशसमयादीनां निर्णयः**

अस्ति भारतवसुन्धराधामललामालङ्कारभूतोऽशेषकल्मषाविमर्दिनिजन्हुकलिन्दनन्दिनीनिनादानुरञ्जितप्रवाहपावितद्रोणिभागः सुरमुनिमनुजेन्द्रनिचयोपरचितविविधयागस्तीर्थराजः प्रयागः । तत्र च परममान्य वदान्यकान्यकुब्जान्ववायाब्जदिवाकरस्य स्वाध्यायाध्ययनविशुद्धवदनस्य श्रीपुण्यसदनस्याधिसदनं तस्यैव पाणिगृहीत्यां सकलकलाकलापकलितललित लीलायां श्रीमतिसुशीलायां रसेषुभुवनरसा (१३५६) सम्मितायां विक्रमशरदि विमले तपसोऽसितदले सप्तम्यामखिलदुराग्रहधियामज्ञानान्धतमसं ध्वंसयन्तः प्रादुरभून्निमे भवदवदहनदग्धहृदयदीनजनैकशरणाः श्रीमदाचार्यभगवच्चरणाः । स्पष्टमुपवर्णितमेतदाचार्यचरितं वाल्मीकिवैश्वानरागस्त्यसंहितादिष्विति नात्र विकल्पशिल्पिकल्पितार्थवृततिविनाशचतुरः प्रखरसमालोचनावसर इति नाधिकमातन्यते ।

ततस्ते दिव्यदृशो ब्रह्मचर्यावस्थायामधिवाराणसि वेदवेदाङ्गाद्यखिलानवद्यविद्योदन्वतः परमहंसपरिव्राजकाचार्यश्रीमद्राघवानन्दस्वामिनः सकाशादल्पीयसानेहसा सरहस्यं समस्तविद्यामध्यगीषत ।

**संक्षेपतस्तच्चरित्रम्**

तदनु च पूर्वतनानन्तभवाभ्यस्तवैषयिकविलासवागुरागृथितस्वान्ताङ्गजालजटिलाङ्गनाङ्गदसारतां निखिलानन्दनिलयनिलम्पपतिवन्द्यपादारविन्दश्रीरामचन्द्रचरणानुध्यानजन्यानुभवस्य चोपादेयतामुपदिदिक्षवो ब्रह्मचर्यादेव स्वीचक्रुस्ततः एव च गुरोः पञ्चसंस्कारपुरस्सरं पारिव्रज्यम्*

एवं तुर्याश्रममङ्गीकृत्य काशीमेवाधिवसन्तः प्रथयामासुर्भागवतं धर्मम् ।

* एतेन "केनचिद्विद्वानाम्प्रियेण 'आसन्निमे वैष्णवदीक्षाग्रहणात्प्राक् काषाया म्बरिणो रामभारतीत्यभिधामादधाना गोसांयिन' इत्यादिकमभिदधे" तत्प्रत्युक्तम् ।

अनैपुश्चानल्पजल्पाकान्पण्डितप्रकाण्डाननेकाञ्छ्रीवैष्णवाम्नायधर्मम् । अशेष-शास्त्रार्थपारदृश्वनामेषां श्रीमदनन्तानन्दप्रभृतयः परमात्मप्रत्यगात्मस्वरूपयाथार्थ्य-वेदिनो द्वादश विनेया विरक्तिमादधानाः प्राधान्येनासन्नित्येतेषां चरित्रं भक्त-मालादिषूपलभ्यतेऽतोऽत्र नाप्रस्तुतं प्रपञ्च्यते ।

कर्हिचिदेते भगवच्चरणा भारतीयानेकतीर्थदिदृक्षया पर्य्यटन्तस्तुरीया-श्रमशालितया वादवदावदेन दिग्विजयमनीहमाना अपि सौगतार्हतप्रच्छन्न-नास्तिकान् नैजागमोद्घोषमात्रेण कान्दिशीकान्विदधतः स्वतः एव दिग्विजयेन स्वकीयकीर्तिपताकां स्फालयन्तो जनमनस्सु प्रत्यतिष्ठपञ्छ्रीवैष्णवधर्मम् । एवं सर्वत्र स्वीयानितरसाधारणेन वैदुष्यवैदग्ध्येन लोकोत्तरमहिमवैभवेन स्वकीय-विजयवैजयन्तीम्प्रसार्य तत्र तत्र जनांश्च परात्परश्रीरामरहस्यपरान्विधाय पुनः समवाप्य स्वकीयकाशिकाश्रमं सश्रमं विशिष्टाद्वैतराद्धान्तं तत्सर्वस्वभूतं षड्व-र्णकं श्रीराममहामनुञ्च सविधि वसुधातले प्राचीचरन् ।

**भाष्यनिर्माणकारणम्**

अथैकदास्य मुनिजनमानसोल्लासकरस्य निश्रेयसानन्यसाधनस्य महा-महिमशालिनो विश्वजनीनस्य मंत्रराजस्य श्रीराममनोः प्रचारतानवमाकलय्य निस्सीमकरुणापूरिते चेतसि कथमिमे लोकाः श्रीरा-ममनुमागृह्णीयुः कथन्तराञ्च विशिष्टाद्वैतमतस्य भूयान् प्रचारः स्यादितीचिन्तोद्रेकः समुदपद्यत ।

अत्र चेदं वक्तव्यमापतति । आसीत्पुरा परमपुरुषार्थप्रसाधकोऽनादि-निधनोऽनवच्छिन्नपरम्परापरिगृहीत एक एव श्रीसम्प्रदायः । तस्य च मन्त्रो-

---

एवंविधे तदीयाभिधाने मानाभावात् । नहि कश्चित्प्रमाणपरतन्त्रोऽनुन्मत्तो निर्मूलाया-मेतादृश्यां वितथकथायां स्वकीयां लेखनीं व्यापारयेत् । यदि नामायं लेखको वाल्मिकि-वैश्वानरागस्त्यसंहितादीनां नामाप्यश्रोष्यत्तैवं तदा तथाविधमभिधास्यत् । ईदृक्षैरेवोच्छृङ्ख-लैरनर्गलालापिभिरस्य सम्प्रदायदीपस्य निष्प्रभत्वमुपचक्रे' इति तु सुधीभिर्विभावनीयम् ।

पास्योपासनाद्याचारानभिन्नत्वाच्छाखाद्वयम्पूर्वत एवोपजातम् । एकस्यां शाखायामखिलश्रुतितदुपबृंहणीभूतस्मृतीतिहासपुराणोपवर्णितमहिम्नो निःश्रेयसार्थिजनमनोरथपूर्तिसमर्थस्य श्रीराममनोरेवाचार्यपरम्परया सम्प्रदेयत्वमासीत् ।

उक्तञ्च तद्वाल्मकीयसंहितायाम् ।

" इमां सृष्टिं समुत्पाद्य जीवानां हितकाम्यया ।
आद्यां शक्तिं महादेवीं श्रीसीतां जनकात्मजाम् ॥ २।३३॥
तारकं मन्त्रराजन्तु श्रावयामास ईश्वरः ।
जानकी तु जगन्माता हनुमन्तं गुणाकरम् ॥ २।३४॥
श्रावयामास नूनं स ब्रह्माणं सुधियांवरम् ।
तस्माल्लेभे वसिष्ठर्षिः क्रमादस्मादवातरत् ॥ २।३५॥
भूमौ हि राममन्त्रोयं योगिनां सुखदः शिवः ।"

एवं तृतीयपञ्चमाध्याययोरप्यभिहितम् ।

" श्रीसीता रामतः प्राप सा ददौ वायुसूनवे ।
ब्रह्मणे स ददावित्थं राममन्त्रपरम्परा " ॥ ३।१७॥
" इममेव मनुं पूर्वं साकेतपतिर्मामवोचत् " । ५ । इति ।

तदपरस्याञ्च शाखायां श्रीमदष्टाक्षरमन्त्रस्यैव तत्तदाचार्यपरम्परया सम्प्रदेयत्वमिति विवेकः । तत्रैवमनवच्छिन्नेऽस्मिन्राममनुसम्प्रदाये समापन्नप्रत्यूहव्यूहनिराकरिष्णुभिस्तत्तदाचार्यैः सम्प्रचारितेऽपि परिणामप्रधानेऽमुष्मिन्संसारे समयमहिम्ना कियच्छैथिल्यं समजनि । तदाहिताहमहमिकैः कतिपयैरहंयुभिः साम्प्रदायिकवैभवमसहिष्णुभिश्च स्वमनोराज्यविजृम्भणायैतत्सम्प्रदायसिद्धान्तस्तृणायमत्वा परितत्यजे । कैश्चित्किंकर्तव्यताशून्यमौदासीन्यमुपभेजे । अन्यैश्च सम्प्रदायान्तरमशिश्रिये ।

तस्मिन्ननेहसि ज्ञानगरिम्णा द्रढिमानमुपेयुषा श्रीमन्नारायमंत्रजपपरेण

श्रुतिसमधिगतस्वीयविशिष्टाद्वैतसिद्धान्तमारक्षितुकामेन पुरोदीरितश्रीसम्प्रदायशाखान्तरेण तानुच्छृंखलान् स्वोपदेशप्रभावेण स्वायत्तीकृत्य स्वमतं प्रत्यष्ठापि। ततः प्रभृत्युपदेशपाटवेन बंहीयसा शास्त्रबलेन तन्मताचार्यावितथप्रयत्नेन च सा श्रीनारायणीयशाखा परमं प्राधान्यमगमत्। तस्मिन्नवसरे शाखेयं विपक्षपक्षापाकरणदक्षबहुलाक्षरां ग्रन्थसम्पत्तिमपि भूयसीं समचेष्ट।

अनया च श्रीरामीयशाखया क्रमशः शैथिल्यमासादि। चिरादाचार्यैर्भगवत्पादैः प्राणपणेनापि सुरक्षिताः रहस्यग्रन्था अपि प्रचारवैशद्यमनासाद्य लुप्तप्रायाः बभूवुः। तदेवं लघिमानमुपेयुषाऽनेन शाखान्तरेण शास्त्राचारविचारप्रमुखक्रियाकलापबलालङ्कृतया श्रीनारायणमन्त्रोद्भासितया श्रीसम्प्रदायीयान्यया शाखया सममनभिन्नेनापि व्यधायि क्षीरनीरयोरैक्यमिवैक्यम्। समपादि च श्रीराममन्त्रेण समं श्रीनारायणमन्त्रस्य सामानाधिकरण्यमपि। एतच्चैक्यं स्वोत्कर्षविशेषावाप्तयेऽग्रेतनैराचार्यैः कृतमपि जगन्मोहिन्या भगवन्मायया विपरीतफलकमेव निष्पन्नम्। तथा चास्य श्रीराममनुसम्प्रदायस्याविशिष्टमपि कृत्स्नमाचारविचारादिकं तदभिधायि ग्रन्थजातञ्च स्वानुगुण्येन परिणमय्य कियन्तं भागमितरद्विनाशितम्। किम्बहुना, पूर्वाचार्यैः प्रयत्नप्रणीताः श्रौतस्मार्तप्रबन्धा अप्युपजग्मुः परपरिकल्पितकुहककुहरगह्वरगर्तान्तर्हिततताम्। एषैवानर्थपरम्परा श्रीमदाचार्यभगवच्चरणचेतसि समुद्रिक्तायाश्चिन्तायाः बीजम्। व्यतिगते चैत्रमनवधृतविनिमयमहिते महति समये निरतिशयकरुणाकूपारैर्भगवत्पादैः "आकस्मिकं समापन्नमिममनर्थजालं समूलमुन्मूल्य मदीयप्राणादपि गरीयांसं श्रीराममनुसम्प्रदायं भूयः समुद्धरिष्य" इति समालोच्य स्वतः प्रादुर्भूयान्यदखिलं नान्तरीयकं कार्यं सत्वरमुपसंहृत्यावशिष्टं मुख्यमेव कृत्यमाचिकीर्षुभिश्चिरं दध्ये। एवं विचिन्त्य तैः समुदभासि श्रीमदाञ्जनेयाब्जयोनिवसिष्ठपराशरव्यासवैयासकिपुरुषोत्तमगङ्गाधरप्रमुखाचार्यप्रबन्धोपजीव्यं वेदान्तहृदयावेदकमिदमानन्दभाष्यम्। इदञ्च विशिष्टाद्वैतसिद्धान्तप्रतिपादकं श्रीवैष्णवानां सर्वस्वमेवेति नाविदितं वेदान्तश्रमजुषां विदुषाम्।

एतेनेदमानन्दभाष्यमभिनवप्रचलितपरम्परापन्नमेव न भगवद्रामानन्दमुनिप्रणीतम् लोके तथाऽनुपलम्भाद्विशिष्टाद्वैतमतप्रतिपादकश्रीभाष्येण गतार्थत्वाच्च। न हि सिद्धस्यार्थस्य साधने प्रवर्तन्ते मनीषिणः।

**अनुपलम्भप्रयुक्ताक्षेपस्य समाधानम्**

किञ्च, यदीदं भाष्यं श्रीमद्रामानन्दाचार्यप्रणीतमभविष्यत्तर्हि तत् प्रागपि स्वीयानितरसाधारणख्यातिमासादयिष्यत्। नह्यस्य परम्पराप्रचारतः प्राङ्नामापि कदाचिदपि केनचिच्छ्रुतम्। इतिवदन्तोऽकाण्डताण्डवं विदधतः पण्डितम्मन्याः प्रचण्डवैतण्डिकाः पराकृता वेदितव्याः। समुदीरितानुमाने प्रथमस्य साधनस्य स्वरूपासिद्धेः। लोके श्रीरामानन्दरचितत्वोपलम्भेन च सत्प्रतिपक्षितत्वात्। वैष्णवमताब्जभास्करादिषु द्वितीयहेतोरनैकान्त्याच्च। न च तेष्वपूर्वस्य कियदंशस्य प्रतिपादनेनागतार्थत्वमिति वाच्यम्। प्रकृतेऽपि तुल्यचर्चत्वादिति परितुष्यन्तु।

किञ्च कीदृक्षोऽनुपलम्भोऽभिमतो भवताम्। अखिलजगज्जनप्रतिपत्त्यगोचरत्वं श्रीवैष्णवाम्नायीयजनसंविदविषयत्वं वा? तत्र नाद्यः पक्षो दुर्विपक्षः। न हि कस्य चित्पदार्थस्याखिलभुवनजनमतिविषयत्वं युक्त्यनुगुणं दृष्टचरम्। अन्तिमेऽपि श्रीरामानन्दीयानधिगतत्वं, श्रीरामानुजीयानवगतत्वं, कतिपयवैष्णवानवगतत्वं वेति विवेचनीयम्। तत्र प्राच्यः कल्पः कल्पनानर्हः। श्रीरामानन्दीयैस्सम्यग्ज्ञायमानत्वात्। द्वितीयपक्षोप्यक्षमः प्रमाणाभावात्। न वा तृतीयः। कतिपयवैष्णवापरिज्ञातत्वेन यदि श्रीरामानन्दाचार्यारचितत्वं साध्यते तर्हि तेनैव श्रीभाष्यादेरपि तदाचार्यारचितत्वमकामेनापि भवताभ्युपेतव्यमित्येतेन 'वृद्धिमिच्छतो मूलमपि ते नष्ट'मित्याभाणकः स्मारितो भवति। तस्मादिदं श्रीरामानन्दप्रणीतमेवभाष्यमिति निर्विवादम्।

यच्च केचित् श्रीमद्रामानन्दभगवत्पादैर्वैष्णमताब्जभास्करः श्रीरामार्चनपद्धतिश्चेति पुस्तकद्वयमेव प्रणीतं न ततोऽतिरिक्तं किमपि पुस्तकान्तरं

**भाष्यानुपलब्धिवाद-दस्योत्सादनम्**

स्पष्टमेतदितिहासविदामिति विलिख्यास्यानन्दभाष्यस्य श्रीमद्रामानन्दस्वामिकर्तृकत्वं न्यषेधिषुस्तदपि पयोधरीयधाराप्रपातपततो बिन्दूनवलम्ब्याम्बरारोहणम्। निरुक्तैर्बहुभिर्हेतुभिर्दत्तोत्तरत्वात्। नहि प्रत्यक्षेण सिद्धे पदार्थे तदनुपलब्धावाधुनिकानामितिहासनिबन्धॄणां वचः श्रद्दध्महे। न हि सर्वेऽपीतिहासविदः प्राचेतसद्वैपायननिभा एव भवन्ति यतस्तेऽवितथकथामेव कथयन्ति। विक्रमशासनादर्वाचीनाः केचिदैतिहासिकास्तु प्रायेणैतिह्यप्रधाना एवोपलभामहे प्रमाणपारतन्त्र्येणेत्यत्र ग्रन्थविस्तरभिया परस्परमैतिहासिकानां न दर्शयामो वैमत्यम्। तत्तु स्फुटमेष्यत्यनायासनैव तादृशार्थविचिन्तकानां सूक्ष्मधियामिति सङ्क्षेपः।

यदप्याहुः। नूतनपरम्परायां प्रामाण्यमनुसन्दधद्भिरिदमुदपादीत्यादिकम्। तदप्यखिलमनिलान्दोलितार्कतूलतरलम्। तथा हि कस्य चित् विपुलकुटुम्बिनः सद्मनि समानकार्यनिर्वोढृषु सत्स्वनेकवस्तुषु क्वचिदेकस्मिन् वस्तुनि चिराय व्यवहृतिमुपगते कालेन जीर्णे विनष्टे वा तास्मिन् तन्निर्वाह्यकार्यमापादयितुमदृष्टचरमन्यद्वस्तूपात्तम्भवेद्गृहपतिना न तावता नैतदासीदितः प्रागित्यारेकन्ते केचिन्मनीषिणः। भूयांसि वस्तूनि सुगुप्तान्येव भवन्ति वैभववतां निकेतनेष्विति किमत्र चित्रम्। न वालब्धप्रचारा परम्परापि नूतना। श्रीमदप्राचार्यप्रभृतिभिरुपपादितत्वादित्यन्यत्र निरूपितम्।

किञ्च समस्तमपि वस्तु स्वकीयसमय एव शोभत इति नैसर्गिकनियमात्परम्पराप्रचारावसरेऽन्तः पातिप्रत्यूहव्यूहापाकरणाय तत्र प्रामाण्येन स्मरणाय च चिराय जीर्णकायं कुटिलकीटजुष्टं केषाञ्चिद्विदुषां मञ्जूषामेव जुषमाणमिदं भाष्यभूषणमासादि गवेषणाधिषणैः श्रीरामानन्दीयविपश्चिदपश्चिमैः।

इदन्त्ववधेयम्। यस्य वस्तुनो यावन्न भवत्युपयोगस्तावदेव तद्व्रजति 'नास्ति' 'नोपलभ्यते' इति प्रतीतिविषयताम्। सत्युपयोगे तु पातालतलनिहितमपि तदुद्ध्रियत एवोत्साहप्रयत्नपरिचितैः प्रेक्षावद्भिः पुरुषधौरेयैः। सन्त्यत्र पर

शतानि निदर्शनानि । किं सत्साहसोपचितपराक्रमैः सुरासुरनिकरैरमृतंनासादि प्रयत्नोन्मथनादधित्क्षीरनिधि । किमुत्साहप्रयत्नसार्थेन श्रीमता पार्थेन गतासुर्विप्रसूनुर्नानीयत दुरालोकाल्लोकालोकात्परतरान्मेदिनीभागात् । किं वा न प्रवाहयामासामन्दध्वनिमधिवसुधं स्वर्धुनीधारां प्रथितसत्कथोऽवितथमनोरथो भगीरथो नृपतिः । किं बहुनाऽमुना वाग्जालेन विज्ञानप्रचुरेऽस्मिन्नव्यजगन्मण्डले किं दुरापं परेशानुकम्पावधीरितप्रयत्नानां दूरदर्शिनां सुधियामित्यलमतोऽवशिष्टमिष्टमुट्टङ्क्यते ।

**आनन्दभाष्यमिति नाम्नोबीजम्**

एवञ्च भगवत्पादैरस्य भाष्यस्य 'आनन्दभाष्यम्' इति नाम्ना प्रसिद्धिरकारि । अस्याभिप्रायस्त्वेवमनुमिनुमः । ब्रह्मण आनन्दगुणसारत्वादानन्दपदेन व्यपदेशो दृश्यते 'तद्गुणसारत्वात्तुतद्व्यपदेशः प्राज्ञवत्' (ब्र. सु.२।३।३०)इति पारमर्षानुशासनात् । अत एव "आनन्दो ब्रह्मव्यजानात्" "को ह्येवान्यात्कः प्राण्यात् यद्येष आकाश आनन्दो न स्यात्" "आनन्दादेव खल्विमानि भूतानि जायन्ते आनन्देन जातानि जीवन्ति आनन्दं प्रयन्त्यभिसंविशन्ति" इत्याद्याः श्रुतयः सङ्गच्छन्ते । अयमर्थश्च विस्तरेणानन्दमयाधिकरणेऽभ्यधायि प्रमाण बाहुल्येन श्रीमदाचार्येणः। तत एव च हेतोरानन्दपदाभिधेयब्रह्मनाम्नास्य भाष्यस्य ख्यातिरुपादार्शि श्रीमदाचार्यधुरीणैरिति । यदि त्वियं ख्यातिस्तदीयेतरजनैरेवोदपादि न भगवत्पादैस्तदा 'श्रीरामानन्द' इति भाष्यकर्तृनामघटकानन्दपदमादायैव भवेत् । 'शांकरभाष्यं' 'रामानुजभाष्य' मितिवदानन्दभाष्यमित्यपि युक्तमेव । अत्र च "विनापि प्रत्ययं पूर्वोत्तरपदयोर्वा लोपो वाच्यः" इत्यनुशासनेन पूर्वपदस्य लोपे 'आनन्द' पदेन श्रीरामानन्द एवाभिधीयते भामेतिवत् । एवञ्चानन्दभाष्यमिति सहेतुकमेवास्याभिधानमुपपद्यतेतराम् ।

एतद्ब्रह्मसूत्रमेव शारीरकमीमांसाशब्देन व्यपदिश्यते । अस्यार्थस्तु— शरीरस्यायं शारीरः परमात्मा 'तस्येदम्'(पा.सू० ४।३।१२०) इति सम्बन्धेऽण्। शारीरं परमात्मानं कायति प्रतिपादयति शारीरकं ब्रह्ममीमांसाशास्त्रम् । शब्दा-

भिधायिनः कैधातोः "आतोऽनुपसर्गेकः (पा. सू० ३। २। ३) इति कः। तथा च जीवनियन्तृपरमात्मप्रतिपादकविचारशास्त्रमित्यर्थः पर्य्यवस्यति साम्प्रदायिकानाम्। एतेन शरीरमेव शरीरकं कुत्सितत्वात् तत्रनिवासी शारीरक उपाधिविशिष्टो जीवात्मा तस्य ब्रह्मत्वविचारो मीमांसेत्याद्यर्थजातमपास्तम्।

नह्युपाहितस्य जीवस्यात्र प्रतिपादनं लेशतोऽपि कृतम्। अथातो ब्रह्मजिज्ञासेत्यनेन परब्रह्मण एव जिज्ञासाविषयत्वेनाभिमतत्वात्सूत्रकृतामित्यलं पल्लवितेन।

(अथास्यानन्दभाष्यस्येतरेभ्योऽखिलेभ्य एव भाष्येभ्यो वरीवर्त्युत्कृष्टत्वम्। नह्यत्र विवादलेशः। तथा हि कस्मिंश्चिद्भाष्ये केवलं वृत्तिरिवैव सूत्रार्थो वर्णितः।

**भाष्यान्तरेभ्योऽस्योत्कृष्टत्वम्**

क्वचिच्चावेशवशाद्विशेषनिर्देशेन महता संदर्भेण संरम्भेण च परमतनिराकरणम्, जिज्ञासितार्थानभिधानञ्च। क्वचिदुक्तस्यैवार्थस्यासकृद्वर्णनेन पौनरुक्त्यम्। क्वचिच्च भाष्यान्तरानुकृतिमुपसृत्यापरमतानिराकरणम्। एतत्सर्वमस्मिन् भाष्ये लेशतोऽपि नोपलभ्यते। अत्र तु भगवत्पादाः श्रीमदाचार्याः सूत्रकारीयाभिमतभावगर्भया नैसर्गिकप्रसादविशदगभीरया गिरा व्याचख्युः सर्वमपि प्रशस्तार्थं शास्त्रम्। न च क्वचिदप्यणुतोऽप्युत्सूत्रं दुराग्रहक्लेशकवलितं वाभिदधुः।)

तथा च—

सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुसारिभिः।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः॥
पदच्छेदः पदार्थश्च विग्रहो वाक्ययोजना।
आक्षेपश्च समाधानं व्याख्यानं षड्विधं मतम्॥
विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम्।
प्रयोजनञ्च पञ्चाङ्गं प्राञ्चोऽधिकरणं विदुः॥

केचिद्शाङ्गात्मकमधिकरणमाहुः——

संगतिर्विषयश्चैव संशयोत्थानकारणम् ।
संशयश्च प्रकारश्च तदर्थो च विचारणा ॥
तस्यां फलफलित्वञ्च न्यायौ द्वौ पक्षयोर्द्वयो ।
निर्णयस्तत्फलश्चेति बोध्यान्यधिकृतौ दश ॥

इति भाष्यव्याख्यानाधिकरणलक्षणान्यभियुक्तैरभिहितान्युपपद्यन्तेतरामत्र याथार्थ्येनेति प्रत्यक्षं भविष्यति निष्पक्षपातात्क्षाणां प्रेक्षावतां प्रेक्षणे नातोऽधिकं प्रपञ्च्यते ॥

इदं पुना रहस्यमवश्यमभिदध्महे । भाष्यमेतद्विशिष्टाद्वैतमतानुसार्यखिलवेदान्तशास्त्रस्य सामञ्जस्यमादधाति । विशिष्टाद्वैतमेव च मतमभिमतं सूत्रकृताम् ।

**भाष्याशयवर्णनम्**

तथा हि—"तदनन्यत्वमारम्भणशब्दादिभ्यः" (ब्र. सू० २।१।१४) एतस्मिन्नधिकरणे स्थूलाचिदचिद्विशिष्टस्य ब्रह्मण उपादेयजगद्रूपतां सूक्ष्माचिदाचिद्विशिष्टस्य तस्यैव चोपादानकारणतामुक्त्वा शरीरशरीरिभावानिबन्धनमेव स्वरूपेणानाभिन्नयोश्चेतनाचेतनयोस्तथा चैतन्येनैक्येऽपिस्वरूपेण भिन्नयोः परमात्मप्रत्यगात्मनोरपृथक्सिद्धिलक्षणस्तादात्म्यसम्बन्धः साधितः। तदेव च "तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियत" "अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" 'तत्सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य सच्च त्यच्चाभवत्' इति श्रुतिनिकरैरभिधाय 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः" "ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो'इत्यादिभिः श्रुतिभिःसामानाधिकरण्यप्रतिपादनपुरस्सरं तादात्म्यमुपदर्शितम्। एवञ्च परजीवाचेतनानां स्वरूपेणैक्यस्य दुर्वचत्वेन शरीरशरीरिभावनिबन्धनतादात्म्यमूरीकृत्य सामानाधिकरण्यमेवात्र सूत्रहृदयम् । एवं 'नेतरोनुपपत्तेः' (१।१।१७) 'अनुपपत्तेस्तु न शारीरः' (१।२।३) 'न च स्मार्तमतद्धर्माभिलापात्' (१।२।२०) 'शारीश्चोभयेऽपि हि भेदेनैनमधीयते' (१।२।२१) 'विशेषणभेदव्यपदेशाभ्याञ्च नेतरौ' (१।२।२३) 'भेदव्यपदे-

शात्' (१। ३। ५) 'इतरपरामर्शात्स इति चेन्नासम्भवात्' (१। ३। ४२) 'अधिकन्तु भेदनिर्देशात्' (२। १। २२) 'अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात्' (३। ४। ८) एवमादिसूत्रनिचयैः परमात्मप्रत्यगात्मनोर्भेदस्यास-कृदभिहितत्वात् । तस्मादिदमेव सूत्रकृन्मतम् । अस्मिन्नेव चामूलचूडं सङ्गच्छते कृत्स्नमपि वेदान्तशास्त्रम् ।

परमते त्वस्य वेदान्तदर्शनस्य सर्वथाऽसामञ्जस्यमेव व्यज्यते । तथा हि "अथातो ब्रह्मजिज्ञासा" इत्यादिमेन सूत्रेण जिज्ञासितस्य ब्रह्मणो 'जन्माद्यस्य यत' इति द्वितीयेन जगज्जन्मादिकारणत्वरूपं तटस्थलक्षणमभिधीयते । इदञ्च मायाशबलितस्यैव जगत्कारणत्वमिति वादिनां मायिनां मते न सङ्गच्छते । लिलक्षयिषितस्य ब्रह्मणो जिज्ञासाविषयत्वाभावात् । यदि जगत्कारणत्वादि-विशिष्टस्यैव ब्रह्मणो जिज्ञास्यत्वमाद्येन सूत्रेणेष्यते हन्त तर्हि निर्विशेषे शुद्धे ब्रह्मणि प्रमाणव्याहतिर्न निवर्तते । एवं शास्त्रयोनित्वमपि सविशेषस्यैव ब्रह्मणः सम्भवति न निर्विशेषस्येत्युपक्रम एवासामञ्जस्यम् ।

एवं 'नेतरोऽनुपपत्तेः' (१।१।१७) 'अनुपपत्तेस्तु न शारीरः' (१।२।३) 'न च स्मार्तमतद्धर्माभिलापात्' (१। २। २०) शारीरश्चोभयेऽपि हि भेदेनैन-मधीयते' (१। २। २१) 'विशेषणभेदव्यपदेशाभ्याञ्च नेतरौ' (१। २। २३) 'भेदव्यपदेशात्' (१। ३। ५) 'इतरपरामर्शात्स इति चेन्नासम्भवात् (१। ३। १८) 'सुषुप्त्युत्क्रान्त्योर्भेदेन' (१। ३। ४२) 'अधिकन्तु भेदनिर्देशात्' (२। १। २२) इत्याद्यनेकसूत्राणां काल्पनिकभेदाभिधायित्वेन न वस्तुस्थिति बोधकत्वम् । एवं सति 'यत्परः शब्दः स शब्दार्थः' इति सार्वभौमस्य न्यायस्योपरोधोऽपि । न ह्यस्मिन् शास्त्रे केनचिदपि सूत्रेण काल्पनिकार्थाव-बोधकमिदं दर्शनमिति बोध्यते ।

अपिच विदुषो जीवन्मुक्तिसमनन्तरं तत्रैव ब्रह्मतादात्म्यमासादयति प्रत्य-गात्मेति न तस्योत्क्रान्तिरिति तन्मतम् । तदपि ब्रह्मसूत्राननुगुणम् । न ह्यो वै

मुक्तिरुत्क्रान्त्यभावश्च केनापि सूत्रेण प्रतिपाद्येते। प्रत्युत तुरीयाध्यायः सर्वोऽप्युपासनादिसाधनवतो विदुषो मूर्धन्यनाड्योत्क्रम्यार्चिरादिकां सृतिमाश्रित्य देशविशेषमाधिष्ठाय ब्रह्मप्राप्तिलक्षणैवमुक्तिरित्यर्थ एवादधाति सार्थकताम् । न च सगुणब्रह्मोपासकानामेवेयं हिरण्यगर्भादिलोकगमनादिरूपा क्रममुक्तिरिति साम्प्रतम् । सूत्रकारैः सगुणोपास्तिमतामियं क्रममुक्तिरिति क्वाप्यनुक्तत्वात् । तस्मादसामञ्जस्यमेव मतान्तरेऽस्य वेदान्तदर्शनस्येत्यलमनेन प्रासङ्गिकेन विचारेणेति प्रकृतमनुसरामः ।

इमे च श्रीमदाचार्यभगवत्पादाः आनन्दभाष्यम् उपनिषद्भाष्यम् गीताभाष्यम् वैष्णवमताब्जभास्कर श्रीरामार्चनपद्धतिश्चेतीमे ग्रन्था विश्वेषामुपकाराय विरचयाञ्चक्रुः ।

तत्र—

(१) **आनन्दभाष्यम्**—श्रीवैष्णवानां परमनिःश्रेयसनिधानं निखिलवेदान्तार्थप्रकाशनपरम् ।

(२) **उपनिषद्भाष्यं**—परेषां दुर्व्याख्यानेन मालिन्यमुपगतानां श्रुतीनां विशुद्धार्थप्रकाशनपरम् ।

(३) **गीताभाष्यम्**—श्रुतिसूत्रानुसारिसुगमव्याख्यानसमन्वितंपरभक्ति प्रकाशनपरम् ।

---

(१) इदञ्चानन्दभाष्यं पूर्वतनानामाचार्याणां प्रबन्धमनुसृत्यैव श्रीभगवत्पादैः प्राणायि । एतच्च 'कामाच्च नानुमानापेक्षा' (ब्र. सू० १। १। १९।) इति सूत्रस्य भाष्ये 'तस्मात् पूर्वोक्तार्थ एव वृत्तिकृतां सूत्रकृताञ्चतात्पर्यम्' इत्यादिस्वकीयलेखेनैवावगम्यते। सेयं वृत्तिः शुकादीनां केषाञ्चिदाचार्याणां भवेदिदानीञ्च कालेन विनष्टेत्यनुमीयते ।

(२) एतद्भाष्यं पूज्यपादैः श्रीमदाचार्यैः सूत्रभाष्यात्प्रागेव प्रणीतमित्यत्र नास्ति सन्देहलेशः। 'जन्माद्यस्य यतः' (ब्र. सू० १। १। २।) इति सूत्रभाष्ये "एतच्च तत्तदुपनिषद्विवेचनायां स्पष्टीकृतमस्माभिरिति तत एवावगन्तव्यं विशेषार्थिभिरतोऽत्र विरम्यते" इत्येवं स्वकीयलेख एवात्र प्रमाणम् । अत एव सूत्रभाष्ये तत्र तत्र श्रुत्यर्थविचारं संक्षिप्य समन्वय एव विशेषतस्तेषां तात्पर्यं दृश्यते ।

(४) श्रीवैष्णवमताब्जभास्करः— भगवदुपासनारहस्यकालक्षेपाद्यभिधायकः श्रीवैष्णवैरनुष्ठेयार्थस्योपदेशकः ।

(५) श्रीरामार्चनपद्धतिः—परमपुरुष श्रीरामस्यार्चनादिप्रकारस्य बोधिका। इत्येवं श्रीवैष्णवानामावश्यकीयं सर्वमप्यर्थजातमनया स्वनिर्मितया च पञ्चग्रन्थ्या *श्रीवैष्णवाम्नायोपकृतये सञ्जगृहुः ।

अमुष्मिन् वेदान्तदर्शने द्विकद्वयभेदेन चत्वारोऽध्याया वर्तन्ते । चतुर्भिरध्यायैर्निरतिशयसुखरूपायाः परमात्मप्राप्तेः साधनमपि स्वयमेव परमात्मेति समुदितार्थ एवाभिधीयते । तत्र ब्रह्मशब्दार्थं विवृण्वता पूर्वद्विकेन ब्रह्मणो जगज्जन्मादिकारणत्वं सिद्धोपायोपेयत्वञ्चाभिधीयते । उत्तरेण द्विकेन च प्राप्यप्रापकत्वं साध्योपायोपेयत्वञ्च प्रतिपाद्यते । तत्रापि समन्वयाख्येन प्रथमेनाध्यायेन जगत्कारणत्वाभिधायिनां वाक्यानां ब्रह्मण्यन्वयोऽभिधीयते । द्वितीयेन चाविरोधाध्यायेन जगत्कारणे परस्मिन् पुरुषे वेदान्तवाक्यविरोध आगमान्तरसिद्धे प्रधानवस्तुनि चाविरोध इत्येतत्परिह्रियते । साधनाभिधेन तृतीयाध्यायेन तु ब्रह्मप्राप्तेः साधनमभिधीयते । तथा तुरीयेण फलाख्येनाध्यायेन च परप्राप्तेः

(५) इयञ्च श्रीस्वामिचरणैरेव प्रणीतेत्यत्र विप्रतिपद्यन्त एवानेके श्रीरामानन्दीयवैष्णवाः । नह्यत्र सुदृढमुत्पश्यामो वयमपि गमकम् । तथापि वर्तमानमुद्रितपुस्तके तेषामेव कृतिरियमित्येतावताऽस्माभिरपि तत्कृतिषु परिगणिता ।

भूमिकाकृतः

* इमाञ्च सुधोपमां पञ्चग्रन्थीं निस्सीमं जगत्क्षेमं करिष्णवः श्रीमद्रामानन्दभगवत्पादाः स्वयं प्रणीय भारतीयविद्वत्सुमनसां प्रमोदाय भागवतज्ञानोदयाय चाध्यवनिमण्डलं प्रतिष्ठापयामासुः । तत्र भास्करः पद्धतिश्चेति ग्रन्थद्वयन्तु मुद्रितमुपलभ्यते । इदमानन्दभाष्यमप्यधुना मुद्रितमेवेति ग्रन्थत्रयमिदानीं सुलभम् । परमुपनिषद्भाष्यं गीताभाष्यमित्येतद्वयं नितान्तमन्वेषयद्भिरप्यस्माभिर्न तावदद्य यावदुपलब्धिपथं समासादि । आशास्महे यदनवरतं क्रियमाणेन प्रयत्नेन तयोरवाप्तिर्भविष्यति तर्हि तूर्णमेव मुद्रापणादिना संस्कृत्य प्रसिद्धिमानयिष्याम इति ।

भूमिकाकृतः

फलस्वरूपं विविच्यते । इत्येवं चतुर्णामप्यध्यायानां विषयव्यवस्था वर्तते । प्रत्यध्यायश्च चत्वारः पादास्तत्र प्रथमाध्यायस्य ।

**प्रथमे पादे**—अस्पष्टतरजीवादिलिङ्गकानां विचारो वर्तते ।

**द्वितीये**—पुनरस्पष्टजीवादिलिङ्गकानाम् ।

**तृतीये**—स्पष्टजीवादिलिङ्गकानाम् ।

**तुरीये**—स्पष्टतरजीवादिलिङ्गकानाम् ।

**द्वितीयाध्यायस्य प्रथमे पादे**—सांख्यादिस्मृतिविरोधान्न्यायविरोधाच्च प्रसक्तदोषस्य परिहारः ।

**द्वितीये**—सांख्यादिस्मृत्यनुकूलतर्काणां वेदान्तानुसारिसत्तर्कैर्निराकरणम् ।

**तृतीये**—वियदादीनां कार्यत्वसमर्थनम् ।

**चतुर्थे**— इन्द्रियादीनां कार्यत्वनिरूपणम् ।

**तृतीयाध्यायस्य प्रथमे पादे**—ब्रह्मोपासिषा सिद्धये जागराद्यवस्थाश्रयस्य जीवस्य दोषाणां निरूपणम् ।

**द्वितीये**—परमपुरुषस्योभयलिङ्गत्वनिरूपणम् ।

**तृतीये**—ब्रह्मोपासनात्मकविद्याभेदनिरूपणम् ।

**चतुर्थे**—उपासनस्य वर्णाश्रमधर्मेतिकर्तव्यताकत्वेन प्रतिपादनम् ।

**एवं चतुर्थाध्यायस्य प्रथमे पादे**—ब्रह्मोपासनाफलकथनाय उपासनास्वरूपनिरूपणपूर्वकं तदनुष्ठानप्रकारो विद्यामाहात्म्यञ्च विविच्यते ।

**द्वितीये**—ब्रह्मोपासकस्योत्क्रान्तिप्रकारः ।

**तृतीये**—अर्चिरादिगतिनिर्देशपुरस्सरमर्चिरादिनैव विदुषो ब्रह्मप्राप्तिरिति ।

**चतुर्थे तु**—अर्चिरादिना ब्रह्मलोकं गतवतो मुक्तस्य ब्रह्मानुभवलक्षणस्य मोक्षस्य सिद्धिरिति ।

एवं षोडषपादात्मिकया चतुरध्याय्या मुमुक्षोरुपादेयतयाऽवश्यकः सर्वोप्यर्थश्चिन्तितः । अत्रैकपञ्चाशदुत्तरपञ्चशतानि ( ५५१ ) सूत्राणि वर्तन्ते । तत्र प्रथमेऽध्याये सप्तत्रिंशदुत्तरैकशतं (१३७) सूत्राणि । द्वितीये पञ्चपञ्चाशदुत्तरैकशतं ( १५५ ) तृतीये त्र्यशीत्युत्तरैकशतं (१८३ ) चतुर्थे तु षट्सप्तति (७६) सूत्राणीति सूत्रसंख्या ज्ञेया । एवं प्रथेऽध्यायेऽष्टत्रिंशद (३८) धिकरणानि द्वितीये षट्त्रिंशत् (३६) तृतीये चतुष्पञ्चाशत् ( ५४ ) चतुर्थे द्वात्रिंशत् (३२) इत्येवं संकलनया षष्ट्युत्तरैकशत ( १६० ) मधिकरणानि भवन्तीति ।

**परमगुप्तस्यास्य मुद्रापणप्रयोजनम्**

तदेतद्भाष्यरत्नस्यैकं हस्तलिखितं पुस्तकं नातीवाशुद्धं किन्तु प्रभ्रष्टानेकस्थलाक्षरं सुखदसमीरकाश्मीरजनपदनिवासरसिकैः कृपाकूपारैरस्मदाचार्यैरस्मभ्यमदायि समालक्ष्यास्माकं वेदान्ताधिकारितां कियतीम् । तत्समये न्यायवेदान्ताद्यध्ययनमनस्कैरस्माभिश्च गुरुप्रसत्तेः फलमिदमिति विज्ञायातिशयानुक्रोशन समादाय तत्रैव परमगरीयसि श्रीमदाचार्यपुस्तकशाले सन्न्यधायि ।

एवं व्यतीतेष्वनेकेष्वब्देषु भगवत्समीक्षणानुप्रयोज्योऽध्ययोध्यमवन्ध्यायतिकः समजनि गुरुपरम्पराप्रचारः। तत्र 'स्वतन्त्रो यदि भवत्सम्प्रदायस्तर्हि किं भवन्मतं, किञ्चतन्मतोपोद्बलकं प्रमाणम्, इति परिक्षेपिभिराक्षिप्ते भाष्यमिदममुद्रितमेवास्मद्गुरुचरणपुस्तकभवनतः *समाकृष्य प्रदर्शितमस्मदीयसुहृज्जनगोष्ठ्याम् । इदञ्चाश्वाङ्कवसुवसुमतिमिते (१८९७) वैक्रमहायने काश्मीरेण बेणीरामनामकद्विजन्मना राजकीयपुस्तकशालार्थमुदलेखि ।

---

* अत्रैवान्यदपि 'श्रीरामतत्वप्रकाशाख्यं' हस्तलिखितमदृष्टचरं पुस्तकं समासादि । सम्भावयामश्चेदमप्यमुद्रितमेव । अस्यापि काश्मीरदेशतः कश्चनसम्बन्धो ज्ञायत एव । यतस्तस्यान्ते "श्रीरामायणे काश्मीरपुस्तकस्थपाठे–अयोध्या नगरी रम्या शून्यावर्षगणानिच । भवि.ा तु कुशं प्राप्य निवेशमुपलप्स्यत इति । यत्र ऋषभं प्राप्येतिपाठस्तस्यापि कुशपरत्वेनैव व्याख्यानं ऋषभः ज्येष्ठः स च कुश एवेति । इति श्रीरामतत्वप्रकाशे लीलानित्यत्वादिप्रमाणप्रदर्शनं नाम त्रयोदशोल्लासः सम्पूर्णः। भादौं सुदी १ सं० १९०८ लि: बा: रामभरोसा" इति लिखितत्वात् ( अस्य ग्रन्थस्यकस्यचिदपि दिदृक्षा चेदस्मत्सविधे दृष्टव्यः ) ।

भूमिकाकृतः

अथैवमस्याचार्यशिरोमणेः कमनीयकीर्तिस्तम्भस्य भाष्यभूषणस्य साम्प्रदायिकजनोपकाराय मुद्रापयित्वा प्रसिद्धिः करणीयेत्यस्मदीयसुहृद्भिः श्रीरामानन्दवैष्णवमहामण्डलसभ्यैर्भृशं प्रोत्साहिता वयमेकेन पुस्तकेन संशोधनस्यासम्भवान्मुद्रापणं दुःशकमिति मन्वानाः पुस्तकान्तरमन्वेषयितुं प्रायतिष्महि।

तदायोध्यायामध्ययनशीलेन नैपालेन * श्रीरामानन्दीयवैष्णवेन स्वस्थानादानीय दानीयं प्रादायीदमपरमपि पुस्तकम्।

तदेवं हस्तलिखितं पुस्तकद्वयमासाद्य भूयसा श्रमेणावाङ्मनसगोचरप्रभावप्रतिभोद्भासितान्तःकरणैः श्रीमदाचार्यैरभिभाषितस्य परमप्रशस्यस्यास्य भाष्यस्य निर्व्याजाम्नायपरिचर्यानुरागरञ्जितस्वान्तैरस्माभिः 'शुभस्य शीघ्रम्' इति वचनमनुसन्दधद्भिष्टीकाटिप्पण्यादिभिर्भूषणीयस्यापि निष्टिप्पणीकस्यैव संशोधनपूर्वकं व्यधायि मुद्रापणम्।

---

* अयञ्च वैदुष्यविशालो नैपालो वैष्णवः पञ्चषमासेभ्यः प्रागधिकार्तिकं हरिहरक्षेत्रे स्नातुमागतो विहारमण्डलमधितिष्ठन्त्याः श्रीमत्या वाङ्मत्यास्तीर उपकमरथुग्राममादौ मिलितः। तदा सामयिकवार्ताप्रसङ्गेन 'अस्ति मदन्तिके गुरुस्थाने प्रीणं श्रीरामानन्दभाष्यं हस्तलिखितम्' इत्युदीरिते तस्मिन् तत्रैव मुद्रितपुस्तकपञ्चकप्रदानपणेन प्रतिश्रुत्य त्वरयानीयतामिति प्रस्थापितः। सोऽप्यधिगतवृत्तस्तदानीयपुस्तकमयोध्यायामेव समदादस्मभ्यम्। एतत्कृतेऽस्य महात्मनः परोपकारिणश्चिरमाधमर्ण्यमुपगता वयं बिभृमोऽनल्पामुपकृतिम्। एतत्पुस्तकस्यापि चरमपृष्ठे "इति श्रीमदानन्दनामके श्रीरामानन्दभाष्ये चतुर्थोऽध्यायः समाप्तः। श्रीसीतारामार्पणमस्तु। संवत् १८३५ लि० प० रामसेवकदास वैष्णवेन" इति लिखितं वर्तते। एतदप्यतिजीर्णमासञ्जितानल्पस्थलकर्गलखण्डमण्डितं क्षरदक्षरं कथञ्चिद्वाचकान्तरसाहाय्येन व्यज्ञासिष्म। (भू० कृ०)

पुनरयोध्यामेव कस्मिंश्चिद्वैष्णवमन्दिरेऽप्येकं पुस्तकमस्तीति श्रुतमस्माभिः परं न लब्धम्। एतदुपक्रम्य मन्मित्रेण दृष्टतद्ग्रन्थेनाभ्यधायि यत्र तद्रामानन्दभाष्यमपि तु केनचन वेदान्तसूत्राण्युल्लिख्य तट्टीकामिषेणोपनिषद्गीतावाक्यान्यधस्तादुद्धृत्य जानकीभाष्यमिति नाम्ना ख्यापितम्। तच्च प्रतिपदमशुद्धमुत्सूत्रमपार्थकञ्च केवलं बाललीलाविलसितम्" इत्याकर्ण्य तत्सङ्ग्रहादव्यवर्तिष्महि। मन्यामहे श्रेयोनिधानमिदमेवानन्दभाष्यं मूलतो विपर्य्यस्य ख्यातिसतृष्णः कश्चिदचयाञ्चकार दुर्वचश्चीवरचणामिमां ग्रन्थकन्थाम्।

भूमिकाकृतः।

अत्र च मनुजस्वभावसुलभप्रमादादस्मदीयमतिमान्द्याद्वर्णनियोजकावधानाद्वा समागतेषु दोषेषु गुणैकपक्षपातिनो दोषज्ञान् प्रार्थयन्तोऽधस्तने पद्ये एव विनिवेदयामः सविनयम् ।

क्वेमा भाष्यगिरो गूढाः क्वाहं मन्दमतिः पुनः ।
यथाबुद्धि विशोध्यैव प्रार्थयामि विपश्चितः ॥१॥
त्रुटयोऽत्र समापन्नाः स्युरेवेति दयाचणैः ।
क्षन्तव्यास्ताः सदा सद्भिर्मानुष्यात्सम्भवन्ति हि ॥२॥

अथेदानीमन्ते स्वान्ते श्रीरामानन्दीयानामनुदिनमेधमानामुन्नतिमभिकाङ्क्षमाणा वयमभ्यर्थयामहे साञ्जलिबन्धं भगवद्भ्यः श्रीरामचन्द्रचरणसरसीरुहेभ्यो यत् तुष्यतु किलानेन कर्मणा स एव साकेतनिलयो देवः पुष्णातु चाहर्दिवं श्रीरामानन्दान्ववायमिति शम् ।*

निवेदकाः—
**श्रीरघुवरदास वेदान्तिनः ।**
**दर्शननिधयः**
(तर्कवेदान्ततीर्थन्यायमीमांसोपाध्याययवेदान्तशिरोमणयश्च).

---

* इदन्त्वाचक्ष्महे—पुस्तकद्वयमासाद्यापि स्वीयबुद्धिवैशद्यानुगुणं यथासाध्यं संशोध्येदमुपह्रियते भवद्भ्यो भाष्यरत्नम् । परमुपलब्धयोर्द्वयोः पुस्तकयोरेकस्य विशुद्धत्वेऽप्यतिजीर्णत्वाद्गलिताक्षरत्वाच्चापरपुस्तकसाहाय्येनैव सर्वथा दुर्वाच्यमपि विशुद्धपुस्तकपाठं दर्शं दर्शं संशोध्य सत्यप्यपरस्मिन् पुस्तके क्वचित्पाठभेदेऽयमेव पाठः स्थापितः । एवं स्थिते सम्भावयामः क्वचित्संदिग्धार्थतापि पदे वाक्ये वा सम्पद्येतेति । तस्याश्च विचारोऽग्रिमावृत्तावेव कृतो भविष्यतीति ।

संशोधनकृत

श्रीमते रामानन्दाय नमः

श्रीमद्भगवद्रामानन्दाचार्य्यविरचितं




यस्माद्विश्वमुदेति येन लभते संरक्षणं शाश्वतं,
यस्मिन्नप्ययमेति यो हि सततं कारुण्यवारां निधिः ।
यः कल्याणगुणाकरस्त्रिजगतः श्रेयः परम्मापक-
स्तं ब्रह्मार्चितपादपद्मयुगलं रामाख्यमीशं नुमः ॥१॥
श्रीरामाख्यम्परं ब्रह्म सदाम्नायान्तदीपितम्
स्वभक्तैर्ध्येयमाप्यश्च वन्दे दिव्यगुणाकरम् ॥२॥

---

(प्रथमाध्याये प्रथमपादे जिज्ञासाधिकरणम्)

अथाखिलाम्नायाध्ययनमनुपपत्तिमदृते ब्रह्मचर्यादिति तत्प्रयुक्त-वाक्यविचारस्याप्यतिरेकेण वेदाध्ययनमसम्भवाद् ब्रह्मविचाराऽनुप-पत्तिरित्यापाततो ब्रह्मज्ञानमन्तरेण तद्विषयकजिज्ञासाया अनुदयात्तद-भावे चाखिलहेयप्रत्यनीकानन्तकल्याणगुणाकरत्वाश्रयभगवत्स्वरूपानु-भवासम्भवान्मोक्षानुपलब्धिः ।

तस्मादर्थावगमपुरस्सरमादौ वेदाध्ययनमापादनीयम् । तेन च कर्मणामल्पास्थिरफलकत्वमाकल्य्यानन्तानन्दफलावाप्तये ब्रह्मस्वरूपा-

नुभवसाधनीभूताम्नायान्तवाक्यविचारोऽनुष्ठेय इत्यर्थाल्लभ्यते। एवञ्च "तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते" (छा०८।६।१) इति श्रुतिविरुद्धत्वात् "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति तस्माच्चातुर्मास्येन यजेते" त्यस्य विधिशेषत्वेन तदर्थवादतया तत्स्तुतिमात्रपरत्वमवगन्तव्यम्। स्मर्यतेऽपि च उपभुक्तकर्मविपाकानामुर्वरितानुशययशालिनाम्पुनरावृत्तिः। "आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन" (गीता ८।१६) इत्यादिना। तस्मा "त्परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन। तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्। तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय। येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्। (मु०१।२।१२।१३) मोक्षस्य ब्रह्मावाप्तिलक्षणस्य कृतेन कर्मणाऽसिद्धेरिति ततो विरक्तस्य परतत्त्वबुभुत्सया स्वाचार्योपसदनपूर्वकं ब्रह्मविद्योपदेशश्रवणात्तस्या एव परमात्मनः प्राप्तिहेतुत्वमवसीयत इति। द्रढयत्यमुमेवार्थं श्रुतिगणः। "ब्रह्मविदाप्नोति परम्" (तै० १।१।१) "ब्रह्मविद्ब्रह्मैव भवति" (मु० ३।२।९) "यो वेद निहितं गुहायाम्" (तै० २।१) "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" (तै० २।१।१) "ततस्तु तम्पश्यति ध्यायमानः" "यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्। तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति" ( मु० ३। १। ३ ) "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे" (मुण्ड० २।२।८) "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः। अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते" (कठ० २।६।१४।) "न च पुनरावर्तते" (छा० ८। १५) इति ब्रह्मज्ञानस्यैव परब्रह्मानुभवरूपफलत्वश्रवणात् "येनाक्षरं पुरुषं वेद" इत्यादौ कर्मफलविरक्तस्यैव ब्रह्मज्ञानार्थित्वमवसीयते। एवञ्च "तपसा ब्रह्म विजिज्ञासस्वेति तपोऽतप्यत स तपस्त-

न्द्वानन्दम्ब्रह्म व्यजानात्" (तै० ३।५।६) इति तपसो ब्रह्मजिज्ञासायास्तज्ज्ञानस्य च साधनत्वश्रवणादादौ तदनुष्ठेयम्।

एतदुक्तम्भवति। परमपुरुषार्थानुभवलक्षणविलक्षणसुखावाप्तिकामेनादौ ब्रह्मचर्य्यादिनियमपूर्वकं सार्थाङ्गुश्रवमधीत्य तदुदितकर्म्मणामन्तवत्फलमाकलय्यानन्तफललिप्सया मनःस्थैर्य्यादिसाधनमधिष्ठाय ब्रह्मविचारोऽहर्दिवं विभावनीय इति। तदर्थं भगवान् बादरायण आम्नायान्तवाक्यविचारलक्षणीं प्रणिनाय शारीरकब्रह्ममीमांसाम्। तस्याश्चेदमादिमं सूत्रम्।

---

## अथातो ब्रह्मजिज्ञासा १। १। १।

अत्रानन्तर्य्यार्थकोऽयमथशब्दः। अधिकारादिवाचकस्य तस्य प्रकृतेऽनुपयोगात्। अतःशब्दो हेत्वर्थकः। एवञ्च, साङ्गसशिरस्कवेदाध्ययनेनाधिगतकर्मज्ञानस्य तत्फलवितृष्णतयाऽवाप्ततपस्वित्वमुमुक्षुत्वाद्यनेकसाधनस्य, अविनाशिफलमोक्षाभिलाषुकस्य तदुपायतयावगतब्रह्मजिज्ञासैवानन्तरभाविनी।

कर्मज्ञानानुष्ठानयोश्चित्तकल्मषापनयनपूर्वकवैराग्योत्पादनद्वारा च ब्रह्मज्ञानम्प्रति साधनत्वेन तयोर्हेतुहेतुमद्भावतया पूर्वोत्तरमीमांसयोरेकशास्त्रत्वम्। ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासा। कर्मण्येषा षष्ठी। 'कर्तृकर्मणोः कृति' ति कृद्योगे कर्तरि कर्मणि च षष्ठी विभक्तिर्भवतीति कृद्योगलक्षणा षष्ठी। इध्मप्रव्रश्चनपलाशशातनादिवत्समासः। एवञ्च "कृद्योगा च षष्ठी समस्यत" इति वचनबलात् "प्रतिपदविधाना षष्ठी न समस्यत" इति निषेधस्याप्रसक्तिः। अथवा शेषलक्षणेयं षष्ठीति न किमपि वक्तव्यमवशिष्यते। न चैवं सर्वत्र शेषलक्षणषष्ठ्यैव कार्य्यसम्भवे षष्ठीसमासप्रति-

षेधसूत्राणामानर्थक्यमितिवाच्यम् । तेषां स्वरचिन्तायामुपयोगस्याङ्गीकारादिति सर्वमवदातम् ।

ब्रह्मशब्दश्च महापुरुषादिपदवेदनीयनिरस्ताखिलदोषमनवधिकातिशयासंख्येयकल्याणगुणगणं भगवन्तं श्रीराममेवाह । सामान्यवाचकानां पदानां विशेषार्थे पर्यवसानात् ।

जिज्ञासेत्यत्र प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोः प्रत्ययार्थस्यैव प्राधान्यमितः सनोऽन्यत्रेति वचनबलादिच्छायाया इष्यमाणप्राधानत्वादिष्यमाणज्ञानमिह विधेयम् । न केवलं कर्मभिः परपुरुषानुभवरूपो मोक्षः शक्योऽवाप्तुम् । वेदान्तवाक्यविचाररूपाया उत्तरमीमांसाया वैयर्थ्यप्रसङ्गात् ।

इदमत्र विचार्यते । परभक्त्यपरपर्यायज्ञानातिरेकिकर्मभिर्मुक्तिस्तद्विरहितेन ज्ञानेन वा ? नाद्यः । वेदान्तविचारशास्त्रानारभ्यत्वप्रसङ्गात् । नान्त्यः । अपसिद्धान्तान्नैष्कर्म्यवादप्रसङ्गाच्च । तस्मात् कर्मविशिष्टस्यैव ज्ञानस्य मोक्षसाधनत्वमितिसिद्धान्तः । तथाच श्रुतिः । "अन्धन्तमः प्रविशन्ति येऽविद्यामुपासते । ततोभूय इव ते तमो य उ विद्यायां रताः ।" (ईश० ९) अत्राविद्याशब्देन केवलं कर्मोच्यते "अविद्या कर्मसंज्ञान्ये" तिस्मृतेः । एवं विद्यायां रता इत्यस्य स्वाधिकारोचितकर्मपरित्यागेन विद्यायां रता इत्यर्थः । अयमभिप्रायः । पार्थक्येन नैकस्यापि श्रेयःसाधनत्वमपि तु कर्मसचिवज्ञानस्यैवेति वेदवित्समयः । दर्शयति चामुमेवार्थं श्रुतिः । "विद्याञ्चाविद्याञ्च यस्तद्वेदोभयं सह । अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते"(ई०११) इति नित्यनैमित्तिककर्मणां कल्मषापनयनद्वारा ब्रह्मोपासनरूपविद्योपचायकत्वमेव ।

एवञ्च, अङ्गाङ्गिभावेन सहानुष्ठेयं यो वेद सोऽविद्यया विद्याङ्गतयाऽनुष्ठितेन कर्मणा मृत्युं ज्ञानोत्पत्तिप्रतिबन्धकीभूतमदृष्टपदवेदनीयं प्राक्तनं कर्म तीर्त्वोल्लङ्घ्यामृतमश्नुते मोक्षमाप्नोतीत्यर्थः । अस्यां श्रुतौ

विद्याशब्देन प्रकृतसूत्रे च ब्रह्मजिज्ञासाघटके जिज्ञासापदेन ध्यानोपासनादिशब्दवाच्यं वेदनमेवोच्यते न तु वाक्यजन्यमापातज्ञानम् । पदवाक्यप्रमाणनिष्णातस्य व्युत्पत्तिमतः पदसन्दर्भश्राविणो विधिमन्तरेणाऽपि प्राप्तत्वात् । समामनन्ति च, "आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" (बृ० ६।५।) "अनुविद्य विजानाति" (छा० ८।१२।६) "विज्ञाय प्रज्ञां कुर्वीत" (बृ० ६।४।२१) "आत्मेत्येवोपासीत" (बृ० ३।४।७) इत्यादिश्रुतयः । अत्राध्ययनविधिसमासादिताखिलवेदः प्रयोजनवदर्थमभिकांक्षमाणस्तन्निर्णयमात्रफलो निसर्गत एव प्रवर्तमानतया तस्य प्राप्तत्वमेव (?) । श्रुतार्थप्रतिष्ठापकत्वान्मननस्येति तस्यापि चिरायार्थप्रतिष्ठासोरनुवादकत्वमेव । अप्राप्ते शास्त्रमर्थवदिति न्यायात् । इति निदिध्यासनमेवात्र विहितम् । तथा च श्रुतिः । "ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम् । (श्वे० १।३) तच्च विसजातीयं ग्रहासंसृष्टाकारकमनोवृत्तिरूपम् । सा च वृत्तिः स्मृत्यपरपर्य्याया साक्षात्काररूपैव । अत एव "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे" (मु० २।८) "स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः" इत्यादावपरोक्षात्मकानुभवरूप एव प्रदर्शितः । प्राप्नोति च स्मृतिरेव भावनाप्रकर्षाद्दर्शनरूपताम् । द्रढयत्यमुमेवार्थं श्रुतिः । "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते स तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वाम् । (मु० ३।२।३) अयमर्थः- "यथा न पृथिव्यामग्निश्चेतव्यो नान्तरिक्षे न दिवि हिरण्यं निधाय तु चेतव्यम् ।" इत्यादौ केवलपृथिव्याद्यधिकरणकाग्निचयनं निषिध्य हिरण्यस्थापनपूर्वकं तद्विधीयते । तथात्रापि केवलेन प्रवचनसाधनेन मननेन ध्यानेन श्रवणेन वेदमात्मस्वरूपं नासाद्यते । अपि तु निरतिशयप्रेमविशिष्टेनैव, एष आत्मा यं प्रीतिविशिष्टं पुरुषं वृणुते स्वीकरोति

तेनैव पुरुषविशेषेणायं लभ्यः। स्वीक्रियमाणता च स्वविषयकाखण्डानुरागवत्येव जायत इति लोकव्यवहारः।

एवञ्च, परमात्मविषयकोऽनुरागस्तस्मिन् परमपुरुषे प्रेमोत्पादनद्वारा तदवाप्तौ कारणताम्भजत इति निर्विवादम्। अतएव "तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्। ददामि बुद्धियोगं तं येन मामुपयान्ति ते"। (गी०१०।१०) "पुरुषः स परः पार्थ भक्त्यालभ्यस्त्वनन्यया।" (गी०८।२२) 'प्रियो हि ज्ञानिनोत्यर्थमहं स च मम प्रियः' (गी०७।१७) इत्यादयः स्मृतयः सङ्गच्छन्ते। तस्योपासकस्योत्कटदिदृक्षागर्भरूपपरभक्तिमत एष आत्मा परमात्मा स्वरूपं प्रकाशयति प्रदर्शयतीतिसिद्धम्।

अनेन श्रवणादिसाधनसम्पन्नस्यापि परभक्तिरूपोत्कृष्टसाधनस्यावश्यकत्वमित्यर्थस्वभावादुपबृंहणबलाच्चेत्यवगन्तव्यम्। ध्रुवानुस्मृत्यपरपर्य्यायपरभक्त्यतिरेकेण श्रवणादीनां वैयर्थ्यमेवेतिहृदयम्।

सा च भक्तिः परमप्रेयोभगवदितरवैतृष्ण्यपूर्वकपरमपुरुषानुरागरूपो ज्ञानविशेष एव। तदुद्भवस्य संसारस्यानित्यतामाकलय्याचार्योपसत्तिपुरस्सरवर्णाश्रमाचारसेवनजनितपुण्यक्षालितकषायस्य विवेकवैराग्याभ्यासादिभिरेवेति सर्वमवदातम्।

केचित्तु आहुः। ब्रह्मजिज्ञासेत्यत्र निरस्ताखिलभेदमशेषविशेषप्रत्यनीकं चिन्मात्रमेव तत्वं ब्रह्मपदवाच्यम्। तदेव वस्तुपदाभिलप्यं परमार्थरूपं नित्यशुद्धबुद्धमुक्तस्वभावमप्याम्नायावगततत्वमस्यादिवाक्यावसेयसामानाधिकरण्यविनिश्चितजीवैक्यं बध्यते मुच्यते च। एवञ्च षड्विधतात्पर्यनिर्णायकैर्लिङ्गैस्समेषां वेदान्तानामद्वैते ब्रह्मण्येव निश्चयः। "नेह नानास्ति किञ्चन मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" (का० २।१।११) उदरमन्तरं कुरुते अथ भयं भवति" (तै० २।७) "सर्वं खल्विदं ब्रह्म" (छा० ३।१४।१) "सदेव सोम्येदमग्र

आसीदेकमेवाद्वितीयम्" (छा० ६।२।१) "यस्मात्परं नापरमस्ति किञ्चिद्यस्मान्नाणीयो न ज्यायोस्ति कश्चित्" (श्वे० ३।९) "यस्मिन्सर्वाणि भूतान्यात्मैवाभूद्विजानतः। तत्र को मोहः कः शोक एकत्वमनुपश्यतः" (ई० ७) एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बभूव (क० २।२) तथाक्षरा द्विविधाः सौम्य भावा : प्रजायन्ते तत्र चैवापियन्ति" (मु० २।१।१) "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च। खं वायुर्ज्योतिरापश्च पृथिवी विश्वस्य धारिणी" (मु० २।१।३) "इदं सर्वं यदयमात्मा" (बृ० २।४।४) "यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कम्पश्येत् तत्केन कं विजानीयात्" (बृ० २।४।१४) "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" (छा० ६।१।४) "मायामात्रन्तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्" (ब्र० सू० ३।२।३) "तदनन्यत्वमारम्भणशब्दादिभ्यः" (ब्र० सू० २।१।१५) "क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत" (गी० १३।२।) "न तदस्ति विना यत्स्यान्मया भूतं चराचरम्।" (गी० १०।३९) "विभेदजनके ज्ञाने नाशमात्यन्तिके गते। आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति" (वि० पु० ६।७।९४) "मायामात्रमिदं द्वैतमद्वैतं परमार्थतः (गौ० पा० का० १७) इत्याद्यनेकश्रुतिस्मृतिप्रामाण्यात् सर्वोऽपिभोक्तृभोक्तव्यादिभेदप्रपञ्चस्तस्मिंश्चिन्मात्रब्रह्मण्यनाद्यविद्यया परिकल्पितः। इयञ्चानिर्वचनीयरूपाविद्यैवाज्ञानपदेनाभिधीयते।

तच्चाज्ञानमागमप्रत्यक्षानुमानबलेनानादिभावरूपमेवावगम्यते। अभावरूपत्वे तु तस्य तुच्छतयाऽकिञ्चित्करत्वेन तद्विशिष्टस्य ब्रह्मणो जगत्कारणत्वं न स्यात्। ननु नास्त्येव त्वसिद्धान्तेऽखिलदोषपूर्णस्यास्य जगतो ब्रह्मकारणत्वम्। तस्य निर्विकारत्वेन कौटस्थ्यभङ्गप्रसङ्गात्। अपितु निरस्तसमस्तदोषगन्धं कार्यकारणविलक्षणं स्वानु-

भूतिरूपं वस्तु इति चेत्। चिरंजीवत्वायुष्मान् । कोह्यनुकूलमाचरति प्रतिकूलमाचरेत्। नास्त्येव वस्तुतोऽसमन्वयेऽसंगस्य ब्रह्मणो जगत्कारणत्वम्। न च तदभावे "सदैव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" "यतो वा इमानि भूतानि जायन्त" (तै० ३।१) इत्यादिजगत्कारणत्वाभिधायिनीनां श्रुतीनां वैयर्थ्यमिति वाच्यम्। तासां जगदुपादानाज्ञानाधिष्ठानत्वेनैवोपपत्तेर्न ब्रह्मकारणमपित्वज्ञानमेव । वस्तुतो नाज्ञानस्यापि तत्त्वं वेदान्तेन निर्दिष्टम्। तस्य भ्रमनिमित्तमात्रत्वेनैव उक्तत्वात् । कार्यकारणवादस्याप्यौपनिषदनयानन्तर्गतत्वाद्विवर्तवादस्यैव वेदान्ततात्पर्यावसितत्वादिति । विवर्तश्च पूर्वसिद्धाधिष्ठानविरुद्धासदर्थस्यावस्तुनोऽवभासः। भवति चैव मरुमरीचिकासूदन्वतोऽवभासः स्फीतप्रकाशसमवस्थितशुक्तिकायां रजतस्य चेति। एवं व्यावहारिकसत्तामुपेयुषोऽस्य मिथ्याभूतस्य जगतोऽखण्डानन्दैकरसे चिन्मात्रब्रह्मण्यध्यास इति समन्वयः।

तदेतनादिभेदवासनाप्यायितकलेवरमज्ञानविविजृम्भणं "तरति शोकमात्मवित्" इत्यागमसहस्रशतेन निर्विशेषब्रह्मात्मैकत्वप्रकारकवस्तुज्ञानेन कृत्स्नं निवर्तते । तच्च ज्ञानमज्ञानं नाशयत्कतकरजोवत्स्वयमप्युपशाम्यति । ततः परं यदवशिष्यते तत्स्वानुभूतिरूपं चिन्मात्रं ब्रह्मैव। तद्वस्तुभूतस्य ब्रह्मण एवाऽत्र जिज्ञासाभिमता सूत्रकृतामिति।

### समाधानभाष्यम्

तदेतदनास्वादितागमतत्वानां त्रयीसमधिगतार्थाऽनुष्ठानखिन्नानां कुतर्ककर्कशवागुरानिगडितान्तःकरणानां श्रुतिप्रतिपन्नतर्कपराहतमानसानां चोद्यमिदं धर्म्मपथारूढैश्श्रद्धाधनैरनादरणीयम्।

(तथाहि निर्विशेषं ब्रह्मेति कथमवगतम्? केनचित् प्रमाणेन तदतिरिक्तेन वा? नाद्यः। प्रमाणगम्यत्वेन सविशेषतया निर्विशेषत्वा-

भावात् । न द्वितीयः । प्रमाणातीतस्य वस्तुनः प्रामाणिकैरनङ्गीकारात् । नापि षड्विधलिङ्गैर्वेदान्तानामद्वैततात्पर्यमित्यपि युक्तम् । तेषां सविशेषब्रह्मण्येव तात्पर्यावसायित्वात् । यत्तु स्वार्थसाधनाय केषाञ्चिच्छ्रौतवचसामुपोद्बलकतयोपादानम् । तत् "विनायकं प्रकुर्वाणो रचयामास वानर" मितिन्यायं स्मारयत् स्वविरुद्धार्थमेवोपस्थापयति। तथाहि "नेह नानास्ति किञ्चन" (बृ० ६।४।१६) इत्यादौ नाद्वैतं प्रतिपाद्यते किन्तु इह द्रष्टव्ये ब्रह्मणि नानात्वं किञ्चन नास्ति—भेदलेशोऽपि नास्तीत्युच्यते । अयमभिप्रायः । स्थावरजङ्गमस्यास्य जगतो ब्रह्मकार्यतया तदन्तर्यामितया च तदात्मकत्वेनैक्यात्तद्भिन्नं नानात्वं प्रतिषिध्यते । अन्यथा "बहु स्यां प्रजायेय" (छा० ६।२।३) इति बहुभवनसंकल्पपूर्वकं ब्रह्मणो नानात्वं श्रुतिसिद्धं बालक्रीडनकं स्यात् । समबलश्रुत्योर्विरोधे तु विकल्प एव स्यात् । तस्य चाष्टदोषदुष्टत्वादनुपदमनङ्गीकारात् ।

किञ्चैकमर्थं प्रतिपाद्य स्वयमेव निराकुर्वत्याः श्रुतेरुन्मत्तप्रलापित्वमपि दुष्परिहरम् । न च न स्वरूपेण निषेधं ब्रूमः किन्तु पारमार्थिकत्वाकारेणेति वाच्यम् । स्वरूपस्यानिषेधेऽबाध्यत्वलक्षणपारमार्थिकत्वस्यापि सत्त्वेन तस्यापि निषेधानर्हत्वात् । तस्मान्नास्मिन्प्रकरणे ब्रह्मातिरिक्तं निषिध्यत इति निर्विवादम् ।

यदपि—"यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते अथ तस्य भयं भवति" (तै० २।७।) इत्यादिना भेददर्शिनो भयप्राप्तिरित्युक्तम् । तदप्यापादनानर्हम् । तथाहि "सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत" (छा० ३।१४।१) इत्यादौ सर्वस्यास्य जगतस्तदुदयावन—लयकर्मतया तच्छरीरानुसन्धानेनात्र शान्तिर्विधीयते तज्ज्ञानस्याभयजनकतया न भयोत्पादकत्वमिति । "अथ तस्य भयं भवती" त्युत्तरवाक्यस्य तु "यदा ह्येवैष एतस्मिन्नि" त्यादिना या प्रतिष्ठा

विहिता तस्या भङ्गे भयमित्युच्यत इति स्पष्टोऽयमर्थः श्रुतितदुपबृंहणीभूतेतिहासपुराणेष्विति । सच्छब्दस्य विशेष्यभूतपरमात्माभिधायित्वेऽप्युत्तरत्रैक्षणपूर्वकबहुभवनरूपकार्यपरिणतत्वात्प्रकृते कारणत्वौपयिकगुणाश्रितत्वविशिष्टसूक्ष्मचिदचिच्छरीरकत्वरूपपरब्रह्मत्वमेव सत्पदप्रवृत्तिनिमित्तम् । एवञ्चाग्रिमवाक्यानामप्यर्थः सङ्गच्छते । नहि यूनि देवदत्ते यथावकाशं प्रसरमाप्नुवाना ज्ञानेच्छादयो गुणा बाल्ये नासन्निति शक्यं कल्पयितुम् । तस्मान्निखिलशक्तिविशिष्टमेव ब्रह्म सृष्टेः प्राक्कालेऽविभक्तनामरूपतया सूक्ष्मचिदचिच्छरीरकमवतिष्ठ इति निर्विवादम् । अद्वितीयपदञ्चात्यन्तविलक्षणं विसजातीयमेव ब्रह्मोपस्थापयन्निमित्तकारणान्तरमस्य जगतो व्यावर्तयति । न तु सजातीयविजातीयस्वगतभेदशून्यत्वम्ब्रह्मणोऽभिदधाति । एकमेवेत्यत्रैवकारेण तस्यामवस्थायां व्यवच्छिद्यते बाहुल्यम् । एवञ्चाक्षपादीयनये कारकव्यापारात्प्राक्कारणे कार्यस्यासत्त्वमप्यनेन सदितिपदेन व्युदस्तम् । तथाचानया श्रुत्या प्रवाहानादित्वमस्य जगतोऽङ्गीकृत्याचिद्द्वारकं पारिणामिकमेवास्मिन् प्रकरणेऽभिधीयते । न तु सदसद्भ्यां व्यपदेशानर्हं मिथ्यात्वम् । प्रत्युताग्रिमवाक्ये केषाञ्चिदृजुस्वान्तानामस्मिन्नर्थे मा भूद्विशय इति तन्मतमुपन्यस्य स्वयमेव दूषितत्वात् । "कथमसतः सज्जायेत" ( श्वे० ६।२।२ ) इति । स्पष्टीकरिष्याम उपरिष्टाज्जन्माद्यधिकरण इममर्थमित्यत्र संक्षेपः ।

एतेन "यस्मात्परं नापरमस्ती" ( श्वे० ३।९ ) त्याद्युपनिषत्सु "क्षेत्रज्ञं चापि मां विद्धी"(गी० १३।२) त्यादिस्मृतिषु च प्रपञ्चमिथ्यात्वपूर्वकं परमार्थतोऽद्वैतमेकमेव ब्रह्माभिधीयत इति मायिमतं सर्वं व्याख्यातं वेदितव्यम् । दुराग्रहमात्रैकसाधनत्वात् । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाभङ्गप्रसङ्गाच्च । नहि तन्मते ब्रह्मातिरिक्तं वस्त्वन्तरं सर्वपदाभिलप्यमस्ति यद्विज्ञानमेकविज्ञाननियतं स्यादिति । नच ब्रह्मस्वरूपेऽव-

गते तदध्यस्तं प्रपञ्चजातं ज्ञातमेव। अधिष्ठानमेव ह्यारोपितवस्तुनः स्वरूपम्। तदतिरेकेणावस्तुभूतस्य कल्पनामात्रलब्धसत्ताकस्य तस्य निर्देष्टुमशक्यत्वादितिवाच्यम्। विकल्पासहत्वात्। तथा हि—आध्यासिकः प्रपञ्चः स्वोपादानतया ब्रह्माश्रयति नवा? आद्ये स्वरूपसत्तया, असत्तया वा? यदि सत्तयेत्यभिधत्से, हन्त! तर्हि, आगतं प्रपञ्चे सत्यत्वम्। अथचासत्तयेत्यन्तिमं पक्षं कक्षीकरोषि चेदमन्दमुपहास्यम्। आश्रयाश्रयिभावश्च सतोरेव कयोश्चिद्वस्तुनोः कुण्डवदरयोरिव लोकशास्त्रसिद्धः। द्वितीये ब्रह्मोपादानवादभङ्गप्रसङ्गः। ननु शुद्धस्य चिद्वस्तुनो नास्त्येवोपादानत्वमितिचेन्न। "यतोवे" (तै० ३।१।१) त्यादिश्रुतिशतव्याकोपप्रसङ्गात्। अथाध्यस्तोपादानमेव श्रुतिरभिधत्त इतिचेत्कोह्यर्थोऽनेन बालक्रीडनेन साधितः स्याद्भगवत्या श्रुत्या। अतः प्रपञ्चसत्यत्वमेव सर्वत्रोपदिष्टमितिदिक्।

यदपि चाज्ञानमनादिभावरूपं पदार्थान्तरमागमप्रत्यक्षानुमानबलेन प्रसाध्य तच्छवलितस्य ब्रह्मणो जगदुपादानत्वमितिकथनन्तदपि महाम्भसि निमज्जतः कुशकाशावलम्बनमनुकरोति। तथा हि—भावरूपस्याज्ञानस्यागमेन साधयितुमशक्यत्वात्। न च "अनृतेन हि प्रत्यूढाः"(छा० ८।३।२।) "इन्द्रो मायाभिः पुरुरूप ईयते (बृ०४।५।१९) इत्याद्यागमाः प्रमाणतामत्र दधत इति वाच्यम्। तत्रानृतशब्दस्य बन्धप्रदायककर्मणि नियतत्वात्। "ऋतं पिबन्तौ सुकृतस्य लोके" (कठ० ३।१) इत्यादौ भगवदाराधनरूपनिष्कामकर्मणो यत्फलं तदृतमिति दृष्ट्वा तद्व्यतिरिक्तमनृतमित्युच्यते। नह्यनेनानृतपदेनानिर्वचनीयं भावरूपमज्ञानमर्हति सेद्धुम्। न च, "आयुर्वै घृतम्" (तैत्तिरीय०का० २।प्र० ३० अ० २) इतिवदनृतपरमत्र गौण्या वृत्याऽनिर्वचनीयभावरूपमज्ञानमभिधत्त इति वाच्यम्। सति शक्यार्थे तात्पर्य्यनिश्चये लक्षणाया अस्वीकार्यत्वात्।

मेण महताऽडम्बरेण प्रतिपादितस्य सर्वोत्कृष्टानन्दस्य चाकाण्डताण्डवायितत्वात् । किन्तु स्वकर्मोपार्जितपुण्यपापरूपादृष्टवशादधिगतमलिनवासनस्य पुंसो मनसोऽविषयत्वमेव । "दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मयासूक्ष्मदर्शिभिः" ( का० १।३।१२ ) "मनसा तु विशुद्धेन" इत्याद्यनेकैः प्रमाणैर्निदिध्यासनादिसाधननिर्मलीकृतान्तःकरणानां मनसो ग्राह्यत्वमेवेति संक्षेपः ।

इतश्च जीवादन्य आनन्दमयः—

## भेदव्यपदेशाच्च । १। १। १८।

"तस्माद्वा एतस्माद्विज्ञानमयात् । अन्योन्तर आत्मानन्दमयः" ( तै० २।५ ) इति स्पष्टं विज्ञानमयाज्जीवाद्भेदस्य व्यपदेशादयं मान्त्रवर्णिक आनन्दमयः परमात्मैव न जीवः । अथवानेन सूत्रेण हेत्वन्तरमाह–तथा हि "ज्ञाज्ञावजावीशनीशौ" ( श्वे० १।९ ) "समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः" ( मु० ३।१।२ ) इत्यादिषु जीवपरमात्मनोर्भेदव्यपदेशात् । किञ्च "अस्माच्छरीरात्समुत्थाय परंज्योतिरुपसम्पद्य स्वेनरूपेणाभिनिष्पद्यते" ( छा० ८।१२।३ ) इत्याविर्भूतस्वरूपस्य मुक्तजीवस्य परमात्मनश्च "जगद्व्यापारवर्जं" मितिसूत्रेण जगत्कर्तृत्वतदकर्तृत्वरूपस्य भेदस्य व्यपदेशान्मुक्तावस्थो जीव आनन्दमयः परमात्मा भवितुमर्हति । जगद्व्यापारवर्ज्जमिति सूत्रं परमात्ममुक्तजीवयोर्भेदमन्तरेणाऽनुपपद्यमानं सत्तयोर्भेदमुपपादयति । अन्यथा मुक्तानां परमात्मस्वरूपत्वेन जगत्कर्तृत्वोपपत्त्या तद्विभाजकस्य जगद्व्यापारवर्ज्जमिति सूत्रस्य प्रणयनप्रयास एव न कुर्यात्सूत्रकारः । कृते त्वेवमुभयोर्भेदः स्पष्ट एव दर्शित इति ।

इतश्च जीवादन्य आनन्दमयः ।